# संस्कृतवार्ता

दिनाङ्कः- 01-12-2020

प्रात: - 06:55

मुख्य-वार्ता:

- केन्द्रसर्वकारेण कृषका अद्य वार्तायै :विज्ञानभवनं समाहूता।:
- प्रधानमन्त्रिणा नरेन्द्रमोदिना देशस्य कृषका: समाश्वासिता: यत् नूतनकृषकविधेयकं कृषकाणां लाभाय एव विनिर्मितम्।
- केन्द्रशासिते जम्मूकश्मीरे प्रदेशे द्वितीय :र्णा निर्वाचनाय सम्पूचरणस्य-सन्ति सज्जा।:
- प्रधानमन्त्री नरेन्द्र मोदी कोरोणार्जालाधृतम् संवादं समाचरत्।न समूहत्रयेण समं अन्त विकासे लग्नेषधस्यसूच्यौ-
- अद्य नागालैंडस्य अष्ट पंचाशत तमते।परिपाल्य :दिवसराज्य :
- देशे कोविडत्रिनवत्ति दशमलव अष्ट :तामितिस्थस्व :नवदश महामार्या--एकप्रतिशन्मिता संजाता।

कोविड आपनिंग

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

केन्द्रसर्वकार-कृषका:

केन्द्रसर्वकारेण कृषका: अद्य वार्तायै समाहूता:। कृषकेभ्य: एकस्मिन् आवाहनपत्रे कृषि-सहयोग-कृषक कल्याण-मन्त्रालय-सचिव: सञ्जय-अग्रवाल: कृषकान् अद्य त्रिवादने वार्तार्थं विज्ञानभवनम् आहूतवान्। कृषिमन्त्री नरेन्द्रसिंहतोमर: प्रावोचत् यत् कृषकनेतार: वार्ताभ्य: समाहूता:। ध्येयास्पदं वर्तते यत् कृषका: नवीन कृषि-नियमानां विरुद्धं आन्दोलनप्रदर्शनं कुर्वन्त: सन्ति।

प्रधानमन्त्री-देव-दीपावली

प्रधानमन्त्रिणा नरेन्द्रमोदिना देशस्य कृषकेभ्य: समाश्वासितं यत् नूतनकृषकविधेयकं कृषकाणां लाभाय एव विनिर्मितम्। सर्वकार: न केवलं कृषकेभ्य: अवसरप्रदानमेव वांच्छति प्रत्युत तेभ्य: सुदृढ-आपणव्यवस्था- प्रदानमपि समीहते। सर्वकार: आत्मनिर्भरभारतम् इति लक्ष्यमुद्दिश्य कृषकाणाम् हितदिशि विशुद्धमनसा कार्यं कुरुते। प्रधानमन्त्री निजसंसदीयक्षेत्रे वाराणस्यां जनसभां संबोधयति स्म। अत्रावसरे असौ न्यगादीत् यत् विपक्षिदलं कृषकान् भ्रामयति।

कृषिसंशोधनविधेयकम् अभिलक्ष्य कृषकविधेयकम् अवलम्ब्य असौ न्यगादीत् यत्-कृषका: निश्चयेन स्वीयोत्पादनानि आपणेषु विक्रेतुं शक्नुविन्त यदि कश्चन कृषक: पुरातनप्रणालीम् पालयितुं तस्य कृते अवसरो वर्तते। स्वीय एकदिवसीय-यात्रावधौ प्रधानमन्त्रिणा प्रयागं वाराणसीं अन्तरा निर्मित: राष्ट्रियराजमार्ग: राष्ट्राय समर्पित:। अत्रावसरे वाराणस्यां प्रधानमन्त्री नैकेषु कार्यक्रमेषु देवदीपावलि उत्सवे चापि सहभागं अकरोत्।

जम्मूकश्मीर-निर्वाचनम्

केन्द्रशासिते जम्मूकश्मीरे प्रदेशे द्वितीय-चरणस्य निर्वाचनाय सम्पूर्णा: सज्जा:। अद्य जम्मूकश्मीरे जिला-विकास-परिषद: द्वितीयचरणाय निर्वाचनानि भवन्ति। सममेव पञ्चायत-उपनिर्वाचनानि अपि आयोज्यन्ते। जना: प्रात: सप्तवादनत: द्विवादनं यावत् मतदानं करिष्यन्ति। अष्टचरणात्मकस्य अस्य निर्वाचनक्रमस्य इदं द्वितीयं चरणम्।

एस.सी.ओ. सम्मेलनम्

दृश्यश्रव्यप्रणाल्या शंघाई-सहयोग-संगठन-प्रमुखानां नवदशतमस्य सम्मेलनस्य समापनं शासकीयसूचनया जातम्। उपराष्ट्रपतिः एम् वेंकैय्या नायडूः सम्मेलनस्य आध्यक्ष्यम् अभजत्। अयं प्रथमोवसरः आसीत् यदा भारतं एतादृशस्य सम्मेलनस्य अध्यक्षतां अवहत्।

प्रधानमन्त्री कोरोना

प्रधानमन्त्री नरेन्द्र मोदी कोरोणा-सूच्यौषधस्य विकासे लग्नेन समूहत्रयेण समं अन्तर्जालाधृतम् संवादं समाचरत्। समूहत्रयस्य नाम इत्थं वर्तते-पुणे-नगरस्य जिनोवा-बायो-फार्मास्यूटिकल-लिमिटेड, हैदराबादे-बायोलॉजिकल-ई-लिमिटेड अथ डॉक्टर-रैडिस-लेबोरेट्री इति। महामार्या: नियमनाय उक्त-समवायै: विधीयमाना: वैज्ञानिक-प्रयासा: प्रधानमन्त्रिणा अनुशंसिता:। सूच्यौषध-विकासाय विभिन्न-समवायानां सामर्थ्य-सन्दर्भेऽपि प्रधानमन्त्री मन्त्रणां व्यदधात्।

कोरोना

देशे कोविड-नवदश महामार्या: स्वस्थतामिति: त्रिनवत्ति दशमलव अष्ट–प्रतिशन्मिता संजाता। विगत चतुर्विंशतिहोरासु त्रयस्त्रिंशदुत्तर-त्रिशताधिक-पंचचत्वारिंशत् सहस्रजना: स्वस्थीभूय गृहं प्रति गता:। स्वास्थमन्त्रालयानुसारं स्वस्थीभूतानां संख्या सप्तचत्वारिंशत्सहस्राधिक-अष्टाशीति-लक्षाधिका जाता। सम्प्रति देशे सक्रियप्रकरणानां संख्या द्वि-पंचाशदुत्तर-नवशताधिक-षड्-चत्वारिंशत्-सह-स्राधिक-चतुर्लक्ष्यम् वर्तते। गतचतुर्विंशति होरासु द्वि-सप्तति-उत्तर-सप्तशताधिक-अष्टत्रिंशत् सहस्रं नूतन-कोरोना-प्रकरणानि पुष्टिकृतानि।

**नागालैंड-राज्यदिवस:**

**अद्य नागालैंडस्य अष्ट पंचाशत तम: राज्यदिवस: परिपाल्यते। इदम् राज्यम् भारतस्य त्रिषष्टि-उत्तर-नवदश शततमे ख्रीष्टाब्दे षोडश तम राज्यस्य रूपेण पुरस्ताद् आगतम्।**

**।। इति वार्ता: ।।**